पण्डितावतंसश्रीमत्शीलरत्नसूरिकृतः

# चतुर्विंशतिजिनस्तुतिसंग्रहः ।

## ( चैत्यवन्दनचतुर्विंशतिका )



प्रकाशक

शंभुलाल जगशीभाई
गूर्जर ग्रंथरत्न कार्यालय
गांधीरस्तो, अमदावाद.

# श्रीमत्शीलरत्नसूरिकृतः स्तुतिसंग्रहः।



## १ ॥ अथ श्रीआदिनाथस्तुतिः ॥[1]

चिदानन्दलीलारसास्वादलीनं, गुणैः सिद्धिभाजामनन्तैरहीनम्। मुदा सर्वदा श्रीयुगादीशदेवं, स्तुवे भद्रदायिक्रमाम्भोजसेवम् ॥१॥
गृहस्थो बभाषे कलाशिल्पसारं, क्रमात् केवली यश्च धर्मप्रकारम्। स एव प्रभुः सर्वलोकोपकारी, न चान्यस्ततो ज्ञाननैर्मल्यधारी ॥२॥
महाशुद्धसिद्धान्तमध्ये प्रसिद्धं, प्रतीतं पुराणेषु शोभासमृद्धम्। गतं वेदवेदान्तशास्त्रेऽवदातं, यदीयं चरित्रं न च क्वापि मातम् ॥३॥
अनन्तं पुनन्तं जनं भक्तिमन्तं, हरन्तं दुरन्तं प्रमादं स्फुरन्तम्। जिनं नाभिभूपालवंशावतंसं, श्रये तं शरण्यं शिवाम्भोजहंसम् ॥४॥
कलाकेलिसर्पप्रणाशे सुपर्णः, सुवर्णोपमानोल्लसद्देहवर्णः। वृषाङ्कः सुखाङ्कूरमेघः सुरम्यं, युगादीश्वरो मे प्रदत्तां सुसाम्यम् ॥५॥



## २ ॥ अथ श्रीअजितनाथजिनस्तुतिः ॥[2]

कुशलकाननपुष्टिवलाहकं, भवदवानलशान्तिवलाहकम्। अजिततीर्थपतिं श्रितवत्सलं, भजत भव्यजना! विगतच्छलम् ॥१॥
विमलकेवलबोधकलाधरं, भविकलोकचकोरकलाधरम्। करिवराङ्कितपादपयोरुहं, नम जिनं जितशत्रुतनूरुहम् ॥२॥

---

१. भुजङ्गप्रयातवृत्तम् २. द्रुतविलम्बितवृत्तम्।

विजयिनी जननीं ननु गर्भगे, व्यजनि यत्र बुधैः सदिदं जगे । मृगपतौ सबलेऽन्तरमाश्रिते, गिरिगुहा किल कैः परिभूयते ? ॥३॥
अपि गदायुधचक्रिपुरन्दरस्थिरपराक्रमभङ्गकरः स्मरः । सुकृतिभिः किल यस्य जगत्पतेर्झटिति नामबलादपि जीयते ॥४॥
सततमक्षयमोक्षपदं श्रितः, स्फुरदनन्तचतुष्टयशोभितः । अजिततीर्थंकरो मम मङ्गलं, दिशतु शाश्वतसौख्यमलं फलम् ॥५॥



## ३ ॥ अथ श्रीसंभवजिनस्तुतिः ॥३

लोचनानन्दविस्तारि चन्द्राननं, मोहमातङ्गभेदाय पञ्चाननम् । विश्वविख्यातनित्योदितप्राभवं, संभवं शंभवं स्तौमि भक्त्या भवम् ॥१॥
येन गर्भस्थितेनापि भूमण्डले, सस्यवृद्ध्या सुभिक्षं विधायाखिले । केवलित्वे पुनर्बोधिबीजार्पणाधारि[1] वात्सल्यधीः सर्वसाधारणा ॥२॥
शोपितो येन संसारघोरार्णवश्चूर्णितश्च प्रमादाचलः स ध्रुवः । मोहसेनापि सा दुर्जया निर्जिता, शक्तिमानं गुरूणां हि को वेदिता ? ॥३॥
देवदेवं दयावल्लरीमण्डपं, दुष्कृतानोकहच्छेदकानेकपम् । पापपङ्कापनोदाय चण्डातपं, संस्तुवे तं तृतीयं तु तीर्थाधिपम् ॥४॥

श्रीजितारिक्ष्मापालसेनाङ्गजः, स्वर्णशैलद्युतिभ्राजिवाजिध्वजः ।
तीर्थनाथस्तृतीयोऽस्तु रत्नत्रयत्रायको मे त्रिलोकीशवन्द्योदयः ॥५॥

---

३. स्रग्विनीवृत्तम् । १. बोधिबीजार्पणा + अधारि–इति पदच्छेदः ।

९ ॥ अथ श्रीसुविधिजिनस्तुतिः ॥[९]

गुणराजिमनोहररत्ननिधिं, वरशान्तरसोर्मिसुधाजलधिम् । परिणामहितोदितपुण्यविधिं, प्रणमामि जिनेन्द्रमहं सुविधिम् ॥१॥

मुदितामलसाधुलसच्चरितं, विदिताऽखिललोकमिहादुरितम् ।
सुखमिच्छसि चेच्चतुर ! त्वरितं, सुविधिं भज तत् सुखमाभरितम् ॥२॥

दधतं सततं सुमहानवमं, विगलन्मलजालमिहानवमम् । सदनं परमप्रशमं नवमं, जिनमश्चत भव्यजना ! नवमम् ॥३॥

पुरुहूतपरम्परया महितं, शमधामहितं सुखधाम हितम् । विदलन्तमघं भविनामहितं, सुविधिं स्मर भव्यकलामहितम् ॥४॥

कमलोपमदक्षिणवामकरं, क्रमसेवनसोदरसन्मकरम् । अवदातयशोजितसोमकरं, सुविधिं श्रयतानघधामकरम् ॥५॥

---

१० ॥ अथ श्रीशीतलनाथस्तुतिः ॥[१०]

अमृतमसमतृष्णातापनिर्वापहेतुं, हितमगदमदभ्रं रागरोगं विनेतुम् ।
कतकफलमशुद्धस्वान्तपानीयशुद्ध्यै, जिनपतिमहमीडे शीतलं पुण्यवृद्ध्यै ॥१॥

दृढरथनृपनन्दानन्दनं नेत्रलीलाम्बुजविकसनभानुं बिभ्रतं योगिलीलाम् ।
भजत शुभजनाः श्रीवत्ससश्रीकपादं, जिनममुमकलङ्कं सर्वदा निर्विषादम् ॥२॥

---

९. तोटकवृत्तम् । १०. मालिनीवृत्तम् ।

॥ ४ ॥

## ८ ॥ अथ श्रीचन्द्रप्रभजिनस्तुतिः ॥[८]

चन्द्रोपलप्रवरचन्द्रमयूखचन्द्रगौराङ्गसंगतगुणाश्रममुक्ततन्द्र ! ।
चन्द्रप्रभ ! त्रिभुवनाधिपते ! प्रसीद, सौभाग्यसुन्दरविभो ! कुशलावलीद ! ॥१॥

श्रीखण्डपाण्डुरमुदारतनुं भवन्तं, व्याख्यानसद्मनि सुवागमृतं किरन्तम् ।
दृष्ट्वा जनेऽजनि जिनेति ननु प्रतीतिर्गङ्गागिरेर्हिमवतः प्रसरीसरीति ॥२॥

विश्वेशशीतरुचिरेखकलालयोऽपि, पीयूषपात्रमपि ऋक्षगणाधिपोऽपि ।
त्वां सेवतेऽधिकसमृद्धिकृते नु नित्यं, राजा न तृप्यति ततः क्रियतेति सत्यम् ? ॥३॥

उद्दामसेनमहसेनवसुंधरेशश्रीलक्ष्मणासुतविवेककरोपदेश ! ।
चन्द्राङ्क ! भव्यजनचन्द्रकिधूमयोने, सौम्यां दृशं मयि निधेहि शुभश्रियोने ! ॥४॥

अष्टाङ्गयोगकुशलोष्टगुणोष्टसिद्धिदाताष्टकर्मबलनिर्दलनप्रसिद्धिः ।
अष्टासु मे श्रवणमातृषु वत्सलत्वमाप्तोष्टमो दिशतु विश्रुतसत्यसत्त्वः ॥५॥



---

८. वसन्ततिलकावृत्तम् ।

## ६ ॥ अथ श्रीपद्मप्रभजिनस्तुतिः ॥[६]

प्रशस्तपद्माकरवत् सुवृत्तः, श्रीसद्मपद्माङ्कपदोऽतिवित्तः । पद्मप्रभः पातु विभुर्विभावविभावरीयान् कृतकर्मलावः ॥१॥
सरोरुहं राजगणेन वन्द्यमानं यदंह्रिश्रयणेन सद्यः । पराभवं राजभवं निरास्थत्, प्रमाणमेतन्महदाश्रयस्य ॥२॥
मूर्ता विभान्त्यत्र विभातसन्ध्याः, सद्धर्मकर्मप्रकृतावबन्ध्याः । मूर्तिर्यदीयाऽवसरं विवेकादित्योदयार्थं ददते प्रवेका ॥३॥
धराधिराजो धर एव धन्यः सीमा सुसीमारमणो न चान्यः । कुले यदीये कमले मराललीलां ललौ यः सुषमाविशालः ॥४॥
प्रवालबालारुणपद्मरागरम्याङ्गकान्तिः परिमुक्तरागः । षडन्तरारिक्षयकारशक्तिं, षष्ठो जिनो यच्छतु मे सुयुक्तिम् ॥५॥

## ७ ॥ अथ श्रीसुपार्श्वनाथस्तुतिः ॥[७]

श्रीप्रतिष्ठनरनाथतनूजं, सुप्रतिष्ठनरनिर्मितपूजम् । देवदेवमभिनौमि सुपार्श्वं, देवताऽधिपतिसेवितपार्श्वम् । ॥१॥
स्वस्तिकारणमनोहरदृष्टिं, स्वस्तिकाङ्कितपदं कृततुष्टिम् । यं जनस्य भजतो ननु पृथ्वीसूनुमृद्धिरिह राजति पृथ्वी ॥२॥
दुःखदुर्गतिविरोधिविकारास्तावदेव भविनां स्युरपाराः । यस्य यावदतुलं त्वभिधानं, स्मर्यते न शुभसिद्धिविधानम् ॥३॥
दर्शनश्रुतलघूरुचरित्रारागताः शिवफला इतिनेत्राः । येन जल्पितुमिवोच्चपताका, उच्छ्रिताः प्रकटपञ्चफणाङ्काः ॥४॥
हारिवारिजरजःकणरङ्गपिञ्जराङ्गसुभगः शुभचङ्गः । श्रीसुपार्श्वभगवानघसंगच्छेदकोऽस्तु गुणगौरवतुङ्गः ॥५॥

६. उपजातिवृत्तम्. ७. स्वागतावृत्तम् ।

## ४ ॥ अथ श्रीअभिनन्दनजिनस्तुतिः ॥[४]

गुणौघमन्दारनिवासनन्दनं, मिथ्यात्वपापोपशमाय चन्दनम् । श्रीसंवरक्ष्मारमणस्य नन्दनं, मुदा स्तुवे तीर्थकराभिनन्दनम् ॥१॥
यं संस्तुवानस्य दशातरङ्गिणी, सहस्रचन्द्रांशुरयात् प्रसर्पिणी । क्षेत्रे नदीमातृकतागते हरेर्वृद्धिं ययौ भक्तिलतामनोहरे ॥२॥
भजन् वनौका अपि यस्य निश्चलं, पादाम्बुजं नित्यमहो महाफलम् । जिनेन्द्रवाच्यं हरिनामसंगतं, स्यान्निष्फलं नो गुरुसेवनं ततः॥३॥
पराभवन् योगबलेन संवरद्विषं सुविस्तारितराजसंवरः । ददातु देवो नवमं रसं वरस्वजन्मसंतर्पितराजसंवरः ॥४॥
ध्यानं चतुर्थं समवाप्य विश्रुतं, योऽर्थं चतुर्थं भजति स्म शाश्वतम् । अरे चतुर्थे शुभितः शुभोदयश्चतुर्थतीर्थप्रभुरस्तु स श्रिये ॥५॥

## ५ ॥ अथ श्रीसुमतिनाथस्तुतिः ॥[५]

मङ्गलावलिनदीमहार्णवं, मङ्गलाप्रवरकुक्षिसंभवम् । मेघभूपतिसुतं दयालतामेघमश्चत जिनं जना रताः ॥१॥
मातुरुत्तमतमाभवन्मतिर्गर्भगेऽपि ननु यत्र जाग्रति । अत्र किं कुतुकमस्य संस्मृतेरप्यदोषधिषणा प्रजायते ॥२॥
अङ्गुलीदलविराजिकोमलं, स्मेरमुत्तमगुणालिकोमलम् । यस्य शस्यपदपद्मयामलं, संश्रयन् न लभते नयामलम् ? ॥३॥
पञ्चबाणबलभञ्जनक्षमं, पञ्चभेदिविषयच्छिदागमम् । पञ्चसारसमितिप्रपञ्चकं, पञ्चमं नमत तीर्थनायकम् ॥४॥
कर्णिकारकुसुमासमप्रभः, क्रौञ्चलक्षितपदो हताशुभः । तीर्थनाथसुमतिर्मनोधृतिं, यच्छतान्मम तथा च निर्वृतिम् ॥५॥

४. उपजातिवृत्तम् अथवा विभावरीवृत्तम्. ५. रथोद्धतावृत्तम् अथवा श्येनी ।

अनीतिवनवेष्टितोऽशुभविकल्पकूटोन्नतः, सदा कठिनतान्वितः सुकृतमार्गरोधोद्यतः ।
तदैव ननु भिद्यते विषममानशैलस्ततस्तवेश ! यदि शासनं कुलिशमाप्यते भाग्यतः ॥३॥
कुबुद्धिविषवल्लरीघनमनःकुडङ्गस्थितिः, प्रतारणमहाविषा सुचपलातिगुप्ता गतिः ।
विभो ! निकृतिपन्नगी ननु तदैव दूरं चरेद्, भवद्वचनगारुडं यदि हृदि प्रकामं स्फुरेत् ॥४॥
भृतत्रिभुवनोदरप्रचुरपङ्कलोभार्णवः, प्रमापणघटोद्भवः सुकृतिलोकनेत्रोत्सवः ।
चतुर्दशजिनेश्वरः शिवफलं गुणस्थानकं, चतुर्दशमसौ विशुद्दिशतु मेघपुत्रोऽधिकम् ॥५॥

## १५ ॥ अथ श्रीधर्मनाथस्तुतिः ॥[१५]

धर्मोद्यमारामलसद्वसन्तं, भव्याङ्गिनां चित्तगृहे वसन्तम् । श्रीधर्मनामानमधीशमीडे, लीनं शिवे सर्वनिवृत्तपीडे ॥१॥
चन्द्रप्रदीपद्युपतीनुदीतान्, सर्वानतीत्योल्लसता प्रतीतान् । केनापि नित्यं स्वपरावभासिज्ञानप्रकाशेन विभो ! विभासि ॥२॥
आदर्शमध्ये मित एव तावद्धीनोऽधिको वा प्रतिभाति भावः । त्रैलोक्यदर्शी निखिलांस्त्वमेव, भावानृतान् पश्यसि देवदेव ! ॥३॥
कर्माङ्कुरात्यन्तभिदे लवित्रं, शुद्ध्यै महातीर्थजलं पवित्रम् । विचारयंस्ते विमलं चरित्रं, को नाम चित्ते न दधाति चित्रम् ? ॥४॥
श्रीभानुवंशाम्बुजचण्डभानुः, प्रभानुगामी कृतमेरुसानुः । धर्मो जिनः पातु निरस्तमारिः, श्रीसुव्रताकुक्षिदरीमृगारिः ॥५॥

---

१५. उपजातिवृत्तम् ।

## १३ ॥ अथ श्रीविमलनाथस्तुतिः ॥[13]

यशसा सकलेन्दुमण्डलं, जितवन्तं विकलङ्कमुज्ज्वलम् । मदमेघघटामहाबलं, विमलं नौमि जिनं सुनिर्मलम् ॥१॥
भगवन् ! भववाससंकटं, विकटं नामविदन्नपि स्फुटम् । निविडैर्ननु कर्मबन्धनैः, स्थितवानस्मि सितो हहा घनैः ॥२॥
भुवनेश ! वनेऽथवा जने, नगरे संवसथेऽथ पत्तने । भवरागविपोर्मिविह्वलः, क्षणमात्रं न सुखं लभे किल ॥३॥
विमलोऽसि जिनाभिधानतः, परिणामादपि तादृशो मतः । अधुनाऽपि तवाभिधा पुनर्विमलं देव ! करोतु मे मनः ॥४॥
गिरिमन्दरकान्तिसुन्दरः, प्रमदोदारनमत्पुरन्दरः । विशदं दिशतु त्रयोदशः, सुकृतोद्द्योतपदं जिनो यशः ॥५॥

## १४ ॥ अथ श्रीअनन्तजिनस्तुतिः ॥[14]

विवेककनकाचलोद्गतमरीचिकल्पद्रुमस्फुरच्छिवफलोल्लसत्सुखरसैकभोगोत्तमः ।
अनन्तजिननायकः सकलसंपदां दायकः, प्रभुर्विजयतां नमद्भविकसंहतेस्त्रायकः ॥१॥
कुबोधखरमारुतोपचितकोपदावानलप्रसर्पदशुभाशयप्रबलधूममालाकुलः ।
भवन्मतसुधासरःशरण ! यामि यावन्मतं, कुकर्मपिशुनः स मां नयति तावदेवेश ! तम् ॥२॥

---

१३. वैतालीयवृत्तम् । १४. पृथ्वीवृत्तम् ।

तृष्णालोलोल्लोलमालाकरालं, मोहाम्भोधिप्रोच्छलत्पङ्कजालम् ।
उत्तीर्णास्ते ये मतं तेऽधिरूढाः, स्वामिन् ! श्रीमन् ! यानपात्रं ह्यमूढाः ॥३॥
दम्भो लोभो मोहमायाप्रमादाः, कामक्रोधभ्रान्तिमिथ्याविवादाः ।
देवासन्ना नैव ते स्युर्वराकाः, सिंहस्येव स्फूर्जतः फेरुपाकाः ॥४॥
माद्यन्मायासूर्यजाकामपाल !, श्रेयान् श्रेयःकल्पवृक्षालवाल ! ।
नेतश्चेतश्चोक्षभावेन युक्तं, त्वत्सेवातो मेऽस्तु कालुष्यमुक्तम् ॥५॥

## १२ ॥ अथ श्रीवासुपूज्यस्तुतिः ॥[१२]

वसुपूज्यराजकुलकीर्तिकरं, हरिपूज्यपादमतुलर्द्धिभरम् । प्रभुवासुपूज्यभगवन्तमहं, प्रणमामि भव्यजनदत्तमहम् ॥१॥
भुवनावतंसभविनो कुशला, भगवन् ! सुखैकरसिकाः सकलाः । ननु तन्निमित्तमतुलार्त्तिहरं, न भवन्तमीश्वर ! भजन्ति परम् ॥२॥
विषया विपाकविषभोगसमा, निखिलाः कषायरिपवो विषमाः । परिहृत्य तानिति कृती रमते, परिणामहारिणि तवेश ! मते ॥३॥
भववासिनो सुखकला विरला, विपुलापि राज्यकमला तरला । भवतः प्रभोरभिलषामि नतः, स्थिर[मेक]मेव शिवसौख्यमतः ॥४॥
तरुणांशुमालिसमकान्तिकलः, कलिताखिलत्रिभुवनो विमल । विभुवासुपूज्यऋभुपूज्यपदद्वितयः प्रसीदतु स मे सुखदः ॥५॥

१२. प्रमिताक्षरावृत्तम् ।

विषमविषयकीलाघोरसंसारदावे, कथमहह !!! दुरन्तक्लेशदायिस्वभावे ।
दधति रतिमधन्या मोहमूढापदेनं, तदुपशमकमाप्तं नो भजन्ते यदेनम् । ॥३॥
कलुषशिरसि भेदे जाज्वलद्वज्ररूपं, निबिडजडिमनाशे चण्डभानुस्वरूपम् ।
कथमिह भजमानाः सत्यशब्दार्थदाक्ष्यं, यमभिदधति देवं साधवः शीतलाख्यम् ॥४॥
अपि दशसु दिशासु स्पष्टबोधप्रकाशं, सदशविधसुधांशुक्शाखिवत् पूरिताशम् ।
दशविधयतिधर्मोल्लासवृद्ध्यै त्रिकालं, दशमजिनवरेन्द्रं नौमि भावाद्‌नालम् ॥५॥

---

## ११ ॥ अथ श्रीश्रेयांसनाथस्तुतिः ॥११

श्रेयोलक्ष्मीराजमानारविन्दम्, पादद्वन्द्वोपास्तिकृद्देववृन्दम् ।
साधुश्रेणीकौमुदीशुक्लपक्षं, श्रीश्रेयांसं संश्रयेऽस्तारिपक्षम् ॥१॥
निर्वाणश्रीकण्ठमाणिक्यहार !, क्लेशध्वान्तच्छेदसूर्यावतार ! ।
वाण्यातीतस्फीतवृत्तमतीत !, त्रायेयाऽहं न त्वया पापभीतः ॥२॥

---

११. शालिनीवृत्तम् ।

ततश्च्युत्वा स्थूलेष्वहमिह निगोदेषु गतवानथ प्रत्येकद्रुक्षितिजलमरुद्वह्निषु भवाः ।
मया संख्यातीता घनतरमपूर्यन्त विकलेष्वथो संख्याता मे जनिमरणकोटी च मिमिले ॥३॥
ततो लेभे पञ्चेन्द्रियचरिगतौ दुःखनिचयान्, क्षुधातृष्णाशीतातपबन्धनवन्धादिविषयान् ।
अथ प्राप्तः सप्तस्वपि नरकपृथ्वीषु यदहं, महाकष्टं वाचा जिनप ! ननु तद्वक्तुमसहम् ॥४॥
इति भ्रान्त्वा भ्रान्त्वा भुवनहित ! लक्षाः सुविततास्तनूभृद्योनीनां चतुरधिगताऽशीतिकलिताः ।
मया भाग्याभोगाद् विभुरथ भवानापि भगवन् !, नमे ! नेतस्तन्मे भव भवहरोऽचिन्त्यबलवन् ! ॥५॥

---

## २२ ॥ अथ श्रीनेमिनाथस्तुतिः ॥[२२]

ब्रह्माद्वैतप्रवरपदवीबोधने चण्डभासं, शोभासंपत्तिलकमखिलश्रीविलासैकवासम् ।
श्रीमन्नेमिं समरससुधावारपारावतारं, विश्वाधारं स्तवनविषयीकर्तुमिच्छाम्युदारम् ॥१॥
श्रेयःश्रेणीकुलयदुकुलोत्तंसवित्तावदात !, प्रेङ्खच्छङ्खाङ्कितनरपतिश्रीसमुद्राङ्गजात ! ।
श्रीशैवेय ! प्रवरकरुणावल्लिवृद्ध्यै वसन्त !, श्रीमन्नेमे ! जय जय विभो ! पादपूतोज्जयन्त ! ॥२॥

---

२२. मन्दाक्रान्तावृत्तम् ।

## २० ॥ अथ श्रीमुनिसुव्रतस्वामिस्तुतिः ॥[२०]

विदितावदातयदुवंशभूषणं, मुदितामनोहरमपास्तदूषणम् । मुनिसुव्रतं जिनपतिं नमाम्यहं, महनीयशासनमनीहमन्वहम् ॥१॥

मिथिलापुरीपतिसुम(मि)त्रसंभवं, शुभवासरोदयसुमित्रवैभवम् ।
भुवनैकमित्रमनिमित्तवत्सलं, मुनिमानमामि जिनपं सदाफलम् ॥२॥

भृगुकच्छनामनगरं तुरङ्गमप्रतिबोधहेतुमगमस्त्वमश्रमः । निशयाऽप्यतीत्य किल षष्टियोजनीमिति तावकी तु करुणातिशायिनी ॥३॥

वरवृत्तपालिकलितं सुनिर्मलं, निभृतं भृतं समरसेन केवलम् । भगवन् ! भवन्तमुचितं महासरःसदृशं श्रयेत कमठः सदा स्थिरः॥४॥

जलपूरपूर्णजलदोपमद्युते !, गुणवासविंशतिशरासनोन्नते ! । मुनिसुव्रतेश ! मम सत्यपेशलं, कुरु चित्तमार्त्तिहरबोधिनिश्चलम् ॥५॥

## २१ ॥ अथ श्रीनमिनाथस्तुतिः ॥[२१]

महामो व्यामोहप्रसरतिमिरत्रासतरणिं, महामोहोदश्वत्सलिलनिलयोत्तारतरणिम् ।
गुणश्रेणीगेहं गहनभव[वि]भ्रान्तिहरणं, शरण्यं सर्वज्ञं नमिमिह जगद्वन्द्यचरणम् ॥१॥
स्थितोऽनन्तं कालं तनुतरनिगोदेषु निवसन्नविश्रामं कुर्वन् जननमरणान्येव भगवन् ! ।
मिथोभिन्नैर्गोत्रैर्विविधविविधैर्बालक इव, प्रसङ्गेन व्यर्थं विहितरतिरासादितशिव ! ॥२॥

२०. मञ्जुभाषिणीवृत्तम् ( नन्दिनी ) । २१. शिखरिणीवृत्तम् ।

## १८ ॥ अथ श्रीअरनाथस्तुतिः ॥१८

मानवदानवदैवतवन्द्यं, तत्त्वकलाकुशलैरभिनन्द्यम् । श्रीअरनाथमनन्तमुदारं, भावभरेण भजामि मुदाऽरम् ॥१॥
कोपविमुक्तममानममायं, नाथमलोभममोहमकायम् । देवमरागमनीहमकामं, नौमि विशुद्धगुणैरभिरामम् ॥२॥
राजसुदर्शनवंशवतंसं, दर्शनदूरितदुरितमहिंसम् । सिद्धिवधूरमणं रमणीयं, नाथममुं नमत स्मरणीयम् ॥३॥
सप्तमचक्रधरं गुणभाजं, सप्तदशाग्रगतं जिनराजम् । अष्टमनोहरसिद्धिनिधानं, ध्यानगतं तनवानि विमानम् ॥४॥
कोमलकाञ्चनकान्तिशरीरं, कर्ममहाबलभञ्जनधीरम् । श्रीअरनाथमुपास्य गभीरं, साधु लभेय भवोदधितीरम् ॥५॥

## १९ ॥ अथ श्रीमल्लिनाथजिनस्तुतिः ॥१९

समुल्लसन्मल्लिसुमस्रजा समः, दधद् यशोराशिरनन्तविक्रमः । क्रमप्रणामप्रवणामरेश्वरस्तनोतु मल्लिः कुशलं जगद्गुरुः ॥१॥
सखीन् नृपान् षड्निजपूर्वजन्मनः, षडन्तरङ्गारिवशीकृतात्मनः । भवानतानीत् शिवराज्यसंगतानहो! गुरूणामविनाशिमित्रता ॥२॥
तनोति वश्यं भुवनं यया स्मरः, स्त्रियं तु तामेव निरूप्य विद्वरः । अपाहरत् तं जगदीशकामिनां(तां) ततो महीयश्चरितं महात्मनाम् ॥३॥
जिनैः परैर्या प्रयतैर्दिनैर्घनैरघानि भावारिचमूस्तपोधनैः । जिगाय चैकेन दिनेन तां भवानहोऽद्भुता ते गुरुसत्त्वता ध्रुवा ! ॥४॥
जिनेन्द्रमल्लिर्नृपकुम्भसंभवस्तमोऽब्धिशोषेऽपि च कुम्भसंभवः । बिभर्तु भद्राणि स कामकुम्भतः, श्रियाऽधिकः कुम्भसुलक्ष्मशोभितः॥५॥

---

१८. दोधकवृत्तम् (विभावरी) । १९. वशस्थवृत्तम् ।

## १६ ॥ अथ श्रीशान्तिनाथस्तुतिः ॥[१६]

जगत्रयीजीवनजागरूक !, प्रभावशान्ते ! गतलोभलूक ! । जय प्रभो ! मन्थनदन्दशूक !, सुपर्णसंक्रन्दनशस्यशूक ! ॥१॥
वसुन्धरावल्लभविश्वसेनकुलप्रदीपक्षितमोहसेन ! । नमोऽस्तु ते श्रीअचिराङ्गजात !, सुजातरूपद्युतिदेह ! तात ! ॥२॥
स्थितस्य गर्भेऽपि तव प्रभावः, स्वयं भुवि क्लेशहरः स्वभावः । समुल्लसावृतिमध्यगस्य, गन्धो यथा जातिमणीवकस्य ॥३॥
त्वया यथाऽरक्षि कपोतपोतः, संपन्नकष्टाद् व्यसनाब्धिपोत ! । तथैव मां रक्ष विभो ! प्रमादनिषादवन्धाविहितप्रसादः ॥४॥
भवानभूत् पञ्चमचक्रवर्त्ती, हरन्जनानां भुवि काममर्त्तीः । श्रुतस्तथा षोडशतीर्थनाथस्तनुष्व शान्ते ! समतां ममाथ ॥५॥

## १७ ॥ अथ श्रीकुन्थुनाथस्तुतिः ॥[१७]

कल्याणकोटीकमलामहोत्पलं, कालत्रिकज्ञानलसत्कलाकलम् । आनम्य सम्यक्कमनीयभावतः, कुन्थुं कृतार्थी भविताहमादृतः ॥१॥
जीवप्रदेशाः समयापराणवः, प्रत्यर्थमन्तातिगपर्यवोद्भवाः । निःशेषमेतत प्रतिभाति ते स्थिरं, ज्ञाने तदस्मात् परमस्ति किङ्करम् ॥२॥
उत्फुल्लनेत्राः सुरराजराजयः, प्रोल्लासिरोमाञ्चविवृद्धमूर्त्तयः । त्वां पूजयेयुः सुरपादपस्रजां, पुञ्जेन दूरे भगवन् ! पराः प्रजाः ॥३॥
पापादपायो न परः परो भवेदेको ह्युपायस्तदुपासने भवे । यत् ते पदाम्भोजविलोकनं हितं, तत् तात्त्विकैर्देव ! तदैव संश्रितम् ॥४॥
बिन्दो रसस्येव सुवर्णसंचयः, स्यादेकवाक्यादपि ते महोदयः । तत् त्वां भजे कुन्थुविभो ! निरन्तरं संपूर्णमूलातिशयैर्मनोहरम् ॥५॥

---

१६. उपजातिवृत्तम् ( उपेन्द्रवज्रा ) । १७. इन्द्रवंशावृत्तम् ।

×इति चारुचम्पककनककेतुककायकान्तिकलाञ्जुषः, सीमन्धरस्य श्रीजिनस्य प्रणत सुकृतश्रीपुषः ।
यमकाष्टकं यः प्रातरशठः पापठीति स पापतः, शीघ्रं विमुक्तः श्रयति परमानन्दमुन्नतिशोभितः ॥९॥

## २६ ॥ अथ वीतरागाऽष्टकम् ॥

तुभ्यं नमः समयधर्मनिवेदकाय ! तुभ्यं नमस्त्रिभुवनेश्वरशेखराय !
तुभ्यं नमः सुरनरामरसेविताय ! तुभ्यं नमो जिन ! जनार्चितपत्कजाय ! ॥१॥
तुभ्यं नमो विलसते हरिचन्दनाय ! तुभ्यं नमो वरकुलाम्बरभास्कराय !
तुभ्यं नमः प्रणतदेवनराधिपाय ! तुभ्यं नमः प्रवररूपमनोहराय ! ॥२॥
तुभ्यं नमो हरिणनायकनायकाय ! तुभ्यं नमो यतिपतिप्रतिपालकाय !
तुभ्यं नमो विकचनीरजलोचनाय ! तुभ्यं नमः स्तनितनादविराजिताय ! ॥३॥
तुभ्यं नमः कुशलमार्गविधायकाय ! तुभ्यं नमो विकटकष्टनिषेधकाय !।
तुभ्यं नमो दुरितरोगचिकित्सकाय ! तुभ्यं नमस्त्रिजगतो हृदि भूषणाय ! ॥४॥
तुभ्यं नमो दलितमोहतमोभराय ! तुभ्यं नमः कनकसन्निभभूघनाय !।
तुभ्यं नमोऽप्यखिलसद्गुणमन्दिराय ! तुभ्यं नमो सुखकलाधिकचन्द्रिकाय ! ॥५॥

× हरिगीतवृत्तम् ।

॥ १० ॥

पुण्यद्धर्या भासमानः कनकगिरिगुरुमस्थशोभासमानः, स्फूर्जत्काकम्प्यमानद्युतिरतिशयतः कल्पवृक्षोपमानः ।
नित्यं निर्लोभमानः परमसुखकलासंपदा शोभमानः, स्वामी श्रीवर्द्धमानः प्रदिशतु कुशलं सद्गुणैर्वर्द्धमानः ॥५॥

॥ इति श्रीशीलरत्नसूरिकृताः सर्वजिनानां स्तुतयः संपूर्णाः ॥

## २५ ॥ अथ श्रीशीलरत्नसूरिकृतं श्रीसीमन्धरस्वामिनोऽष्टकम्* ॥

कल्याणलतासुवसन्तर्तुं, सुरभासुरभासुरभावनतम् । सीमन्धरजिनमतिमधुरगिरं, नम काममकाममकामहरम् ॥१॥
क्रियते स्तवतस्तव येन समा समतारसता रसतारसना । सफला तमवैमि महीवलयासमहं समहं समहं कलया ॥२॥
गुरुगर्वमसौ हरतात् तपनाच्छविदेह विदेह विदेहजनः । जिनपं सुखयन् ननु मोहकिरा, सितया सितया सितया स्वगिरा ॥३॥
रसना हि परत्र कृते रमते, मम नाममनाममनागपि ते । इतरत्र पिको तु धृतिं भणते, सुरसालरसालरसा लभते ॥४॥
त्वरते मम हृद् भजनाय भवत्पदयोरुदयोरुदयो[पि] न च । त्वमुपायमधीश ! तदाशिकरं, वद भावदभावदभाग्यहरम् ॥५॥
किल कर्म पुमांस्तव रुच्यरवैरसदस्य सदस्य सदस्यति वै । घनवज्जलदस्य जलैः सुचिरं, समता समतासमतापभरम् ॥६॥
तव भक्तिरिहापि तमांसि गतेर्द्विपराजपराज ! पराजयते । अत एव बुधैर्भवतोऽत्र कृतां जपराय पराय परायणता ॥७॥
भवते हरति स्तवनाम्नि ममा, भव मा भवमा भवमालिसमा । शममुत्र भजेय भवच्चरणभ्रमरोहमरोहमरोहगुण ! ॥८॥

* उपस्थिताछन्दसम् ।

कामं कामठवारिवाहपटलोपज्ञमसर्पत्पयःपूरः प्लावयति स्म लेशमपि नो त्वां ध्यानगं निर्भय ! ।
तत् किं कौतुकमत्र मोहजलधिर्लोकत्रयव्यापकः, सोऽपि क्षोभयति स्म नो जिनपते ! त्वां संस्तुतेस्तारक ! ॥४॥
जीरापल्लि-फलर्द्धि-काशि-मथुरा शङ्खेश्वर श्रीपुर-त्र्यम्बावत्यणहिल्लपत्तनमुखप्रख्याततीर्थेश्वर ! ।
चञ्चच्चित्रकमूलिकेव भगवन् ! पार्श्व ! त्वदीयाभिधा, कुर्यान्मे गुणकोशमक्षयमसात्राराध्यमाना त्रिधा॥५ ॥

२४ ॥ अथ श्रीमहावीरदेवस्तुतिः ॥[२४]

श्रेयोमूलानुकूलागमशुचिवचसां जन्मभूः पावनानां, मिथ्यात्वप्राणपोषप्रदकुमतगिरां छेदकर्ता घनानाम् ।
त्रैलोक्यत्राणलीलानलसगुणलसद्धर्मसाम्राज्यहेतुर्नेता श्रीवर्द्धमानो मम स्तुतिविषयं भक्तिभाजः समेतु ॥१॥
गर्वोखर्वाद्रिशृङ्गस्थिरदृढमनसां वादधीसादराणां, प्रौढानामिन्द्रभूतिप्रमुखगणभृतां चातुरीसुन्दराणाम् ।
गूढं संदेहजालं सुविषममभिनल्लीलया त्वं क्षणेन, छिन्दानो ध्वान्तराशिं लगयति किमु वा वत्सरं वासरेनः ? ॥२॥
ज्ञानं स्वार्थावभासि प्रमितिरभिमता तत्प्रमेयाश्च भावा, नित्यं चोत्पत्तिनाशध्रुवगुणसहसव्यक्तिमत्तास्त्रभावाः ।
नित्यानित्यं जगत् स्यात् सदसदथ पराकर्तृकं कर्म वश्यं, धर्मः सम्यग्दयात्मा गदितुमिति भवानेव जानात्यवश्यम् ॥३॥
तत्त्वालोकाय नेत्रं भवजलधितटाऽऽवाप्तये यानपात्रं, चित्तोल्लासाय मित्रं कलुषतरु[तति]च्छेदनायोग्रदात्रम् ।
नानासत्तर्करत्नप्रकरगुरुनिधिः शासनं ते चिराय, त्रातर्जीयान्निमित्तं सकलसुकृतिनां पुण्यपुण्योदयाय ॥४॥

२४. स्रग्धरावृत्तम् ।

आगत्यापि श्वसुरसदनं बन्धुवर्गानुरोधाद्, दृष्ट्वा बद्धानशरणपशूनेव कारुण्यबोधात् ।
तानामोच्य न्यवृत उदितात् त्वं स्ववीवाहकृत्यादेवं देव ! प्रभवति दया तावकीनैव सत्या ॥३॥
त्वय्येकस्मिन्नविजितवति ख्यातवीरावतारे, त्रैलोक्यस्याप्यविजय इवाभूज्जयः शंबरारेः ।
मत्तो हस्ती परवनचरांस्त्रासयन्नप्यरातेर्नश्यन् सिंहात् किमु बलवतां मुख्यतामत्र गाते ॥४॥
सौभाग्यश्रीसुभगभगवन्नुज्जयन्ताद्रिशृङ्गप्राप्तप्रेङ्खद्व्रतनिरुपमज्ञाननिर्वाणरङ्ग ! ।
श्रीमन्नेमि( मे ! )दुरितगहनच्छेदनोदारनेमे !, बुद्धिं शुद्धां वितनु नितरां पावने दर्शने मे ? ॥५॥

## २३ ॥ अथ श्रीपार्श्वनाथस्तुतिः ॥२३

विघ्नव्रातविवर्त्तकर्त्तनजगद्विख्यातवीरव्रतः, स्वस्तिश्रेणिसमृद्धिपूरणविधौ कल्पद्रुमो विश्रुतः ।
पुण्यप्रौढिपदप्रभावपटुताप्रत्यक्षपूषा प्रियः, श्रीपार्श्वः परमोदयं जिनपतिः पुष्णातु शाम्यश्रियम् ॥१॥
श्रीवामारमणाश्वसेननृपतिश्रेष्ठान्वयश्रीकर !, प्रेङ्खत्पावनकायकान्तिविजितप्रत्यग्रधाराधर ! ।
पुण्यप्राप्यपदप्रसादपरमश्रीमूलतासाधनश्लाघ्यश्रीधरणेन्द्रवन्द्यचरण ! त्रायस्व मां पाप्मनः ॥२॥
स्वावासात् सहसा समेत्य च भवान् कारुण्यतस्तान्त्रिकादुदध्रे विषमाज्ज्वलन्तमुरगं दीनं यथा पावकात् ।
तां कारुण्यदृशं विधाय भगवन् ! मामप्यनन्याश्रयं, विश्वव्यापिकषायभीषणदवादाकर्ष देव ! स्वयम् ॥३॥

२३. शार्दूलविक्रीडितम् ।

तुभ्यं नमोऽतिशयराजिविभूषिताय ! तुभ्यं नमः कुमतितापसुभञ्जनाय ! ।
तुभ्यं नमो सुखपयोधिवहित्रकाये ! तुभ्यं नमो विगतकैतवमत्सराय ! ॥६॥
तुभ्यं नमो विदितभव्यजनाशयाय ! तुभ्यं नमो निखिलसंशयवारकाय !
तुभ्यं नमः प्रथितकीर्त्तियशोन्विताय ! तुभ्यं नमो जितहृषीकमुनीश्वराय ॥७॥
तुभ्यं नमः प्रमितपुद्गलनिर्मिताय ! तुभ्यं नमः सकलवाङ्मयपारगाय ! ।
तुभ्यं नमो भविकचातकनीरदाय ! तुभ्यं नमश्चरणवैभवदायकाय ! ॥८॥

२७ ॥ पुरुषादानी पार्श्वदेवनाममाला ॥

पास जिनराज सुणि आज शंखेश्वरा, परमपरमेश्वरा विश्व व्याप्यो ।
भीड भांगी जरा जादवानी जई, थिर थई "शंखपुरी" ताम थाप्यो ॥१॥ पास० ॥
सारि करि सार मनोहारि महाराज तुं, मान मुझ वीनती मन्न माची ।
अवर देवा तणी आस कुण कामनी, स्वामीनी सेवना एक साची ॥२॥ पास० ॥
तूंही अरिहन्त भगवन्त भवतारणो, वारणो विषम भय दुःखवाटे ।
तूंही सुखकारणो सारणो काज सहु, तूंही मनोहारणो साच माटे । ॥३॥ पास० ॥

१. यानपात्राय ।

अंतरीक अमीझरा पासपंचासरा भोयरापास भाभा भटेवा । विजयचिन्तामणि सोमचिंतामणि स्वामी सिमातणी करो सेवा ॥४॥
फलवृद्धिपास मनमोहना मगसिया तारसल्ला नमुं नांहि तोटा । सकबलेचाप्रभु आसगुल अजिंया वंभणा थंभणा पास मोटा ॥५॥
गैबी गोडी प्रभुनीलकंठा नमुं हलधरा सांमला पास प्यारा । सुरसरा कंकणा पास दादा वली सूरजमंडण नमुं तरणतारा ॥६॥
जगतवल्लभ कलिकुंड चिंतामणि लोढणासेरिसा स्वामि नमिये । नाकोडन्हावला कलियुगा रावणा पोसीनापास नमि दुःखदमियें ॥७॥
स्वामी माणिक नमुं नाथ सारोडिया–नकोडा जोरवाडी जगेशा । कापली दौलती प्रसमिया मुंजपुरा गाडरीया प्रभु गुणगिरेशा ॥८॥
हमीरपुर पास प्रणमुं वली नवलखा भीडभंजन प्रभु भीड भागे । दुःखभंजन प्रभु डोकरीया नमुं पास जीरावला जगत जागे ॥९॥

उज्जंती उज्जेणिये सहसफणा साहेवा, "महिमदावाद" कोको कडेरा ।
नारिंगा चंचू चल्ला चवलेसरा, तवली फलविहार नागेंद्रनेरा ॥१०॥

पासकल्याण गंगाणिया प्रणमिये पल्लविहार नागेंद्रनाथा । कुर्कट ईश्वरा पासछत्राअहि कमठदेवे नम्या शक्रसाथा ॥११॥
तिमिरगोगो प्रभु दूधिया वल्लभा शंखल घृतकल्लोल बूढा । ढोंगडमल्ला प्रभुपास झोटिंगजी जास महिमा नहीं जगतगूढा ॥१२॥
चोरवाडी जिनराज उद्दामणि पास अज्झावरा नेव नगा । कापडेरा वजेवो प्रभु छेछली सुखसागरतणा करे संगा ॥१३॥
विज्जुला करकडुं मंडलीका वली मुहुरिया श्रीफलोधी अनिंदा । औआ कुलपाक कंसारिया डंबरा अनियला पास प्रणमु आनंदा ॥१४
नव्वसारी नवपल्लवा पासजी श्रीमहादेव वरकाणवासी । परोकल टांकल नव्वखंडा नमुं भक्ततणी जाय जेहथी उदासी ॥१५॥

॥ ११ ॥

मनवंछित प्रभु पासजीने नमुं वली नमुं नाथ साचा नगीना । दुःखदोहग तजी साधुमारग भजी कर्मना केसरीथी नबीना ॥१६॥
अश्वनृपनन्द कुलचन्द्र प्रभु अलवरा बोवडा पास कल्याणराया। होवे कल्याण जस नामथी जय हुवे जननी वामाने धन जेह जाया ॥१७॥
एकशत आठ प्रभु पासनामैं थुण्या सुखसंपति लह्यो सर्ववातें । ऋद्धि यश संपदा सुख शरीरे सदा नाही मणा माहिरे कोई वाते ॥१८॥

साच जाणी स्तव्यो मन्न माहरे गम्यो, पास हृदये रम्यो परमप्रीते ।
समीहित सिद्धि नवनिद्धि पाम्यो सहु, मुझ थकी जगतमां को न जीते ॥१९॥
काज सहु सारजे शत्रु संहारजे, पासशंखेसरा मौज पाउं ।
नित्य परभाति उठी नमुं नाथजी !, तुझ विना अवर कुंण काज ध्याउं ? ॥२०॥
अठार एकासिये फालगुण मासिये, बीज कज्जलपखे छंद करियो ।
गौतम गुरुतणा विजय खुशालने, उत्तमें संपदा सुख वरियो ॥२१॥

